॥ श्रीः ॥

हृदयनारायणदेवविरचितः

# हृदयप्रकाशः ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन यथामति

संशोधितम् ।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह-
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो-
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona,
by Anant Vinayak Patwardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A. LL. B.
at 2 Malabar Hill, Bombay.

॥ श्रीः ॥

# हृदयप्रकाशः ।

श्रीगणेशाय नमः ।

ब्रह्माद्यैरपि गीताय स्वबोधविभवाय च ।
अवितर्क्यस्वरूपाय परस्मै ब्रह्मणे नमः ॥
संगीतशास्त्रसर्वस्वमसाधारणगोचरम् ।
वीणादौ रागमेलादिर्हृदयेशेन कथ्यते ॥
आकरे बहवो मेला द्वादशेहोपयोगिनः ।
मेलः स्वरसमूहः स्याद्रागव्यञ्जनशक्तिमान् ॥
स्वराश्च षड्जऋषभौ गांधारो मध्यमस्तथा ।
पंचमो धैवतश्चैव निषाद इति सप्त ते ॥
स्वराणां व्यवहारोऽत्र प्राग्वदाद्याक्षरैः कृतः ।
द्विश्रुतिर्गोनिषादश्च प्रत्येकं त्रिश्रुती रिधौ ॥
चतुःश्रुतिसमायुक्ताः पूर्ववत्समपाः स्मृताः ।
स्वांत्यश्रुतिस्थिताः शुद्धाः स्युरन्ये विकृताः स्वराः ॥
श्रुतिमाद्यादि तुर्यांताः स्वरा ये चोर्ध्ववर्तिनः ।
तीव्रस्तीव्रतरस्तीव्रतमो भवंति हि क्रमात् ॥
स्वोपांत्यश्रुतिवर्ती तु कोमलः परिकीर्तितः ।
निस्तीव्रतरसंज्ञस्तु काकलीत्यपि कथ्यते ॥
सपयोर्यदि गृहीतस्तिस्रस्तिस्रः श्रुतीर्निमौ ।
मृदुसो मृदुपश्चेति तदाख्ये सपयोर्मते ॥
प्रयोगो बहुधा यस्य स स्याद्वादी नृपोपमः ।
ययोर्भवेयुः श्रुतयो द्वादशाष्टाथवान्तरे ॥

मिथः संवादिनौ तौ स्तौ राज्ञः सचिवसन्निभौ ।
विवादी रक्तिविच्छेदी शत्रुतुल्यः स कीर्तितः ॥
अनुवादी तटस्थो यः किंकरप्रतिमः स्वरः ।
सपौ रिधौ मध्यमसौ निगौ संवादिनौ मिथः ॥
यो यद्रागे जीवभूतः स तस्यांशः स्वरो मतः ।
क्रमेण स्वरसंदर्भोऽलंकारः स प्रचक्षते ॥
मंद्राद्यास्ते च भूयांसो मंद्रत्वे नैवमुच्यते ।
यत्रैकैकस्वरत्यागे पूर्वाद्यंत्यस्त्रिकः क्रमः ॥
यथा—सरिस रिगरि गमग मपम पधप धनिध निसनि ।
क्रियाविशेषजो धर्मः स्वरस्य गमको मतः ।
ग्रंथान्तरे च ते ज्ञेया नामतो हुंफितादयः ॥
न्यासो रागस्य तानस्य श्रान्तिकृद्रंजकस्वरः ।
द्वौ त्रयो वापि चत्वारः स्युस्ताना रंजकस्वराः ॥
पंचाद्यैरथ रागः स त्रिधा पंचभिरौडुवः ।
षड्भिः स्वरैः षाडवः स्यात्संपूर्णः सप्तभिः स्वरैः ॥
न्यासांशौ यत्र नोच्येते तत्त्वं षड्जस्य तत्र तु ।
मंद्रो मध्यश्च तारश्च त्रीणि स्थानानि चक्षते ॥
एकद्वित्र्यंतसंख्याकैस्तथा विद्यात्क्रमात्स्वरान् ।
रक्त्यारोहावरोहश्च स्वराणां मूर्छना स्मृता ॥

इति संज्ञापरिभाषा ।

अथ शुद्धादिस्वरप्रदेशः प्रदर्श्यते ।

ध्वन्यवच्छिन्नवीणादेर्मध्ये तारकसांस्थितिः ।
त्र्यंशिनस्याद्यभागांते मध्यमस्य च पंचमम् ॥
मध्यमं षड्जयोर्गतु सपयोर्मध्यमानयेत् ।
त्र्यंशितस्य तयोर्मध्यस्याद्यांशान्ते तथार्षभम् ॥
तथैव धैवतं मध्ये सपयोः स्थापयेद्बुधः ।
तत्र भागद्वयं त्यक्त्वा निषादाख्यं स्वरं नयेत् ॥

इति शुद्धस्वराः ।

भागत्रयोदिते मध्ये मेरो ऋषभसंज्ञिनः ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
भागत्रयविशिष्टेऽस्मिन् तीव्रगांधारषड्जयोः ॥
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ।
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ॥
कोमलो धैवतः स्थाप्यः पूर्वभागे विवेकिभिः ।
तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥

इति विकृतस्वराः ।

इत्थं सप्तस्वरान्मध्यस्थाने विन्यस्य तारके ।
तानेव द्विगुणीकृत्य ध्वनिज्ञानात्परीक्षयेत् ।
मध्यमस्थो यथा षड्जो द्वैगुण्येनोच्चतां व्रजेत् ॥
तथायं चालयेन्मन्द्रे षड्जस्तेन क्रमेण च ।
मध्यस्थितान् स्वरांस्तांस्तानवशिष्टानभीरयेत् ॥
यथातथं मध्यतारौ तंत्रीष्वेकादिषु स्मृतौ ।
मंद्रषड्जस्तु सर्वत्र परस्यां परिकीर्तितः ॥
मंद्रस्यांते च मध्याद्यां तंत्रीं केचन कुर्वते ।
मध्यतारौ तु संपूर्णौ तंबुराख्ये तथैव सः ॥
तस्यामेव यतस्तंत्र्यां स्थानत्रितययोगिनः ।
ताना भवन्तिस्मैकत्र शेषं बुद्ध्यावधारयेत् ॥

इति शुद्धविकृतस्वरप्रदेशनिरूपणम् ॥

## अथ मेलाः ।

### शुद्धस्वरमेलः ।

शुद्धसप्तस्वरे मेले सैंधवो भैरवीत्यपि ।
नीलांबरी च, तत्र स्यात्सैंधवो धैवतादिकः ॥

आरोहे गनिवर्जो यः स्फुरितेन युतो मुहुः ।
धसरीममपपधधसा निधपधमपमगरिसा ।
धसरिममगरिगरिप । रिनीनीधपमपपमग-
रिरिगगरिस । धधसा निधप मपगगगरिस ।
धधसा निधप मपगगग रिसरिरिसासा निध-
पपमपधनीधमपगगरिस ।

इति सैंधवः ॥ १ ॥

सांशन्यासा च संपूर्णा षड्जादिर्भैरवी भवेत् ।

इति भैरवी ॥ २ ॥

अंशन्यासौपमौ यत्र षड्जादिर्यत्र मूर्छना ।
नीलांबरी सा विज्ञेया कंपांदोलनशोभिता ॥

इति नीलांबरी ॥ ३ ॥

इति शुद्धमेलः ॥

अथैकविकृतौ द्वौ मेलौ ।

( १ ) गांधारैकस्तीव्रतरः ( २ ) धैवतश्चैककोमलः ।
( १ ) गैकस्तीव्रतरे मेले, कर्णाटः ककुभाभिधः ॥
खंभावती जिजावंती सौराष्ट्री सुघरायिका ।
कामोदश्चाप्यडानाख्यस्तथा वागीश्वरीत्यपि ॥
कर्णाटस्तत्र संपूर्णः षड्जादिः परिकीर्तितः ।
सरिगमपधनिस । निधपमगारिस ।

इति कर्नाटः ॥ ४ ॥

षड्जादिर्मूर्छना गांशा संपूर्णा ककुभा मता ।
सरिगमगमरिस । पपसनिनिनिपममरिस ।

इति ककुभा ॥ ५ ॥

ऋषभादिर्जिजावंती पूर्णा पांशा प्रकीर्तिता ।
रिमपससनिधपमरिस निधप निस ।

इति जिजावंती ॥ ६ ॥

ऋषभादिस्तु सौराष्ट्री कंपांदोलितशोभिता ।
रिमपसनिधपमगारिनिस ।

इति सौराष्ट्री ॥ ७ ॥

सुघरायीतु संपूर्णा पांशा गादिकमूर्छना ।
गरिगपमपपधनिस निनिधपमपगमरिस ।

इति सुघरायी ॥ ८ ॥

मांशो गवर्जः कामोदो ऋषभादिरुदाहृतः ।
रिरिममपसानिधपममरिसनिधपस ।

इति कामोदः ॥ ९ ॥

धैवतादिरडानाख्यो धैवतांशस्वरो मतः ।
प्रसिद्धस्तु निषादादिर्यज्ञानंदेन कीर्तितः ॥
धसरिमपमधनिसनिधपममरिस ।

इत्यडाना ॥ १० ॥

गादिर्वागेश्वरी मांशा पहीना षाडवेषु तत् ।
गमधधनिसनिधमगारिसनिधधनिस ।

इति वागेश्वरी ॥ ११ ॥

इति द्वितीयमेलः ।

( २ ) धकोमला सुखारी स्यात्पूर्णा धादिकमूर्छना ।
धसरिमपधससनिधपमगरिस ।

इति सुखारी ॥ १२ ॥

इति तृतीयमेलः ।

अथ द्विविकृतौ द्वौ मेलौ ।

( १ ) कोमलर्षभधैवतौ ( २ ) तीव्रतरगांधारनिषादौ च ।
( १ ) कोमलर्षभधा पूर्णा गांशा तोडी निरूप्यते ।
सरिगमपधनिससनिधपमगरीस ।

इति तोडी ॥ १३ ॥

इति चतुर्थमेलः ।

( २ ) गनितीव्रतरे मेले केदारः श्यामनाटकः ।
खंबावतीच हंमीरः शंकराभरणस्तथा ॥
जयत्पूर्वश्च केदारः पूरियोपपदस्तथा ।
बिहागराहीरनाटौ मारुभीमपलाशिका ॥
छायाकेदारनाटौ च मालकौशिक इत्यपि ।
भूपाळीचेति; केदारः संपूर्णो गादिमूर्छनः ॥
गमपसनिधपमगरिस ।

इति केदारः ॥ १४ ॥

गादिः पूर्णश्च मन्यासः पमांशश्यामनाटकः ।
गमपस सनिधपम पममरिम रिमपमम ।

इति श्यामनाटकः ॥ १५ ॥

धादिः खंबावती पूर्णारोहणे धैवतोज्झिता ।
ममपनिस सनिधपम गरिसगस ।

इति खंबावती ॥ १६ ॥

रिगांशो गादिकः पूर्णो हंमीरः परिकीर्तितः ।
गमपनिधनिस सरिसनिस रिगमपधमप
सरिसनिधप मगमगस ।

इति हंमीरः ॥ १७ ॥

शंकराभरणो गादिर्डालुकंपमनोहरः ।
गमपनिस सनिधपमगरिस पसनि ।

इति शंकराभरणः ॥ १८ ॥

अत्रैवोत्प्रेक्षितो रागो जयत्केदार इत्यसौ ।
जयच्छ्रीयोगतः पूर्णो गन्यासो गादिमूर्छनः ।
गमपनिस सनिधप गमरिस सनिसग ।

इति जयत्केदारः ॥ १९ ॥

पूरिया पूर्वकेदारः पूर्णो मादिकमूर्छनः ।

मधनिस सनिधप मगरिस ।

इति पूरियाकेदारः ॥ २० ॥

षाडवेषु धहीनत्वात् गांधारादिर्बिहागरः ।

गमपनिस, सनिपमगरिस, सरिगमगरिस, निस ।

इति बिहागरः ॥ २१ ॥

धहीनः षाडवोऽहीरनाटो गादिकमूर्छनः ।

गमपनिस, निपमगरिस ।

इत्यहीरनाटः ॥ २२ ॥

रिहीनो गादिको मारुः षाडवः परिकीर्तितः ।

गमप सनिधप गमस ।

इति मारुः ॥ २३ ॥

गादिर्धहीना षड्जादिर्ज्ञेया भीमपलाशिका ।

गमपनिस सपमग रिसनिस ।

इति भीमपलाशिका ॥ २४ ॥

गांधारादिश्च संपूर्णश्छायानाट उदाहृतः ।

गमपस सनिरिस निनिस धपमग सरिस ।

इति छायानाटः ॥ २५ ॥

धहीनः षाडवो गादिर्ज्ञेयः केदारनाटकः ।

गमपनिस सनिपममरिस निनिस ।

इति केदारनाटकः ॥ २६ ॥

संन्यासः षाडवः सादिः कथितो मालकौशिकः ।

सरिगध निससनिध मगरिस ।

इति मालकौशिकः ॥ २७ ॥

मनित्यागादौडुवेषु भूपाली गादिरिष्यते ।

गपधस सधप गरिगरिस धधधध सरिगरिस ।

इति भूपाली ॥ २८ ॥

इति पंचममेलः ।

अथ त्रिविकृतास्त्रयो मेलाः ।

( १ ) गांधारमध्यमनिषादानां तीव्रतरत्वे प्रथमः ।
( २ ) गांधारधैवतनिषादानां तीव्रतरत्वे द्वितीयः ।
( ३ ) गांधारमध्यमनिषादानां तीव्रतमत्वे तृतीयः ।

( १ ) गमध्यमनिषादास्तु यत्र तीव्रतराः कृताः ।
तत्रेमनःपूरियाख्यौ जयत्कल्याण एव च ।
चतुर्थः शुद्धकल्याणः; पूर्णस्तत्रेमनो यथा ।
सरिगमपधनिस सनिधपमगरिस ।

इतीमनः ॥ २९ ॥

पूरियामध्यमादिः स्यात् संपूर्णः कंपशोभितः ।

इति पूरियाकल्याणः ॥ ३० ॥

गांधारादिस्तु संपूर्णो जयत्कल्याण इष्यते ।
गमपस निधपम गरिस ।

इति जयत्कल्याणः ॥ ३१ ॥

मनिहीनः शुद्धपूर्वकल्याणः कथितो बुधैः ।

इति शुद्धकल्याणः ॥ ३२ ॥

इति षष्ठमेलः ।

( २ ) गधैवतनिषादास्तु यत्र तीव्रतराः कृताः ।
तत्र मेले भवन्मेघः शुद्धनाटबिलावलौ ।
नटो देवगिरी गौरसारंगोऽल्हिया तथा ।
देवाभरणदेशाख्यौ गौंडमल्लारसूहवौ ।
मध्यमादिश्च मल्लारो; मेघः संपूर्ण उच्यते ।
सरिगमपधनिस रिसनिधपममरिस
निधपमपस ।

इति मेघः ॥ ३३ ॥

ऋषभादिश्च संपूर्णोऽवरोहे धगवर्जितः ।
निर्मांशस्वरयोः कंपी शुद्धनाट उदाहृतः ॥
रिगमपधनिस पगमरिस धधनिस ।
इति शुद्धनाटः ॥ ३४ ॥

गांधारादिर्नटः पूर्णः पधसैः कंपितैः कलः ।
गमधसरिपनिध पधपमगरिस गरिसगमध
पमगरिस रिसरिसरिस निधपमनिस ।
इति नटः ॥ ३५ ॥

गांशा गादिरपारोहा पूर्णा देवगिरी मता ।
गमधनिस सनिधपमगरिस सनिधपमनिस ।
इति देवगिरी ॥ ३६ ॥

गादिर्गपांशः संपूर्णो गौरसारंग इष्यते ।
गमपस निधपममरिस सरिससरिग ।
इति गौरसारंगः ॥ ३७ ॥

ऋषभांशस्तु संपूर्णोऽलहियाह्वस्तु धादिकः ।
धनिधपसरिस गमगपधस निधपमगरिस ।
इति अलहिया ॥ ३८ ॥

गांधारादिस्तु संपूर्णो देवाभरण इष्यते ।
शंकराभरणवदत्र पांशत्वमवधारयेत् ॥
गमपस सनिपमगरिस निसधपमगरिस निस ।
इति देवाभरणः ॥ ३९ ॥

धहीनः षाडवो गादिर्देशाख्यः परिकीर्तितः ।
गमपस सनिपमगगमरिस ।
इति देशाख्यः ॥ ४० ॥

रिषभादिर्गहीनस्तु गौंडमल्लार इष्यते ।
रिमरिमपधपधससधपममरिस ।
इति गौंडमल्लारः ॥ ४१ ॥

२

निहीनः षाडवोगादिः सूहवः परिकीर्तितः ।

पमपसरिससधपममरिस ।

इति सूहवः ॥ ४२ ॥

मध्यमादिर्गहीनत्वात् षाडवोमध्यमादिकः ।

ममनिससरिसस निपमपनिसपनिपमरिस
निसरिस ।

इति मध्यमादिः ॥ ४३ ॥

स्याद्गहीनस्तु मल्लारः सादिरौडुव ईरितः ।

सरिपमपधपधपममममरिस ।

इति मल्लारः ॥ ४४ ॥

इति सप्तममेलः ।

गस्यतीव्रतमत्वेऽथ तथा तीव्रतमौ मनी ।
इहैवोत्प्रेक्षितापूर्णा हृदयाद्या रमोच्यते ॥

समगधपममरिस निपससारिमस
रिसममरिस ।

इति हृदयरमा ॥ ४५ ॥

इति अष्टममेलः ।

इति त्रिविकृतमेलाः ।

## अथ चतुर्विकृतास्त्रयो मेलाः ।

( १ ) तत्र ऋषभधैवतयोः कोमलत्वे, गांधारनिषादयो
तीव्रतरत्वे प्रथमः ।

( २ ) गांधारस्यातितीव्रतमत्वे, मध्यमधैवतयोस्तीव्रतरत्वे,
निषादस्यकाकलित्वे द्वितीयः ।

( ३ ) गांधारमध्यमधैवतानां तीव्रतरत्वे, निषादस्यकाकलित्वे
तृतीयः ।

( १ ) रिधयोः कोमलत्वात्तु गन्योस्तीव्रतरत्वतः ।
चतुर्भिर्विकृतैर्गौरी मूलतानीधनाश्री ।

श्रीरागश्चैव षड्रागश्चैतीगौरी वसंतकः ।
जयश्रीरामकल्यौच परजः पंचमः पुनः ॥
गांधारासावरीदेशीतोडीमालवभैरवाः ।
बहुली गुर्जरी गौडोगण्यागुणकरी ततः ॥
देशकालश्च मालश्रीर्विभासत्रिवणौ तथा ।
ऋषभांशातुगौरीस्यात्पूर्णाऽऽरोहे धगोज्झिता ॥
रिमपनिस सनिधपमगरिस ।

इति गौरी ॥ ४६ ॥

पूर्णागादिरथाऽऽरोहे मूलतानीधनासरी ।

इति मूलतानीधानसरी ॥ ४७ ॥

संपूर्णऋषभादिः स्यादारोहे गधवर्जितः ।
रिपंचमांशः श्रीरागः सांतः कंपेन शोभितः ।
रिमपनिस सनिधपमगरिगरिस ।

इति श्रीरागः ॥ ४८ ॥

पांशन्यासश्च संपूर्णः षड्रागो गादिमूर्छनः ।
गमपधनिधपरिगरिसममरिरिमप ।

इति षड्रागः ॥ ४९ ॥

पंचमादिश्च संपूर्णा चैतीगौरी निरूप्यते ।
पसनिधपममरिगरिस ।

इति चैतीगौरी ॥ ५० ॥

आरोहे पोज्झितो माद्यः पूर्णोधांशो वसंतकः ।
मधनिस निधपमगरिस ।

इति वसंतः ॥ ५१ ॥

गादिर्जयश्रीः पांशास्यादारोहेधरिवर्जिता ।
धमप सनिधपमगरिस ।

इति जयश्रीः ॥ ५२ ॥

आरोहे मनिहीनास्याद्गांधारादिकमूर्छना ।
धैवतांशा च गन्यासा पूर्णा रामकली मता ॥

गपधस सनिधपगमगरिससरिग ।

इति रामकली ॥ ५३ ॥

गादिर्धन्युज्झितो रोहे परजो मध्यमांशकः ।

गमपसनिधपमगमगरिस ।

इति परजः ॥ ५४ ॥

पहीनारोहणः सादिमांशन्यासस्तु पंचमः ।

सरिगमधनिस सनिधपमगरिस ।

इति पंचमः ॥ ५५ ॥

ऋषभादिर्धैवतांशो गांधारः परिकीर्तितः ।

रिमपधस सनिधपममरिस ।

इति गांधारः ॥ ५६ ॥

निशून्यारोहणा मादिः संपूर्णाऽऽसावरी मता ।

मपधस निधपमगरिस धरिस ।

इत्यासावरी ॥ ५७ ॥

गांधारादिश्च संपूर्णा देशीतोडी निरूप्यते ।

रिसरिसनिधधनिस सरिगमपधानिस

निधपमगरिसरिस ।

इति देशीतोडी ॥ ५८ ॥

संपूर्णो भैरवः प्रोक्तो गांधारादिकमूर्छनः ।

गमपस निधपमगरिस ।

इति भैरवः ॥ ५९ ॥

गादिर्महीना बहुली षाडवेषु निरूप्यते ।

गपधस धनिधस गरिस ।

इति बहुली ॥ ६० ॥

गादिर्धांशा मनित्यागादौडुवेष्वथ गुर्जरी ।

गमपस निधपमरिस ।

इति गुर्जरी ॥ ६१ ॥

ऋषभादिर्गधत्यागादौडुवो गौड इष्यते ।
रिमपनि रिमपनिस सनिपमरिस ।
इति गौडः ॥ ६२ ॥

औडुवेषु धगत्यागाद्गण्या गुणकरी बुधैः ।
सरिरिमपपससनिपप ममरिस सरिममरिस ।
इति गुणकरी ॥ ६३ ॥

गनिशून्यो मध्यमांशो देशकालस्तथौडुवः ।
रिपधस सधपगरिगरिस ।
इति देशकालः ॥ ६४ ॥

रिधत्यागादौडुवेषु मालश्रीर्गादिरिष्यते ।
गमपनिस सनिपमगस ।
इति मालश्रीः ॥ ६५ ॥

औडुवो मनिहीनत्वात् बिभासो गादिरिष्यते ।
गपधस धपगरिगरिस ।
इति बिभासः ॥ ६६ ॥

ऋषभादिर्मनित्यागादौडुवस्त्रिवणो भवेत् ।
रिपधस धपगरिगरिस ।
इति त्रिवणः ॥ ६७ ॥

इति नवममेलः ॥

(२) अतितीव्रतमो गाख्यो मधौ तीव्रतरौ कृतौ ।
यत्र निः काकली; तत्र सारंगः पटमंजरी ॥
सामंतवडहंसौ च; सारंगः सादिमूर्छनः ।
सरिगमपधनिस सनिधपमगरिस ।
इति सारंगः ॥ ६८ ॥

गधत्यागादौडुवेषु षड्जादिः पटमंजरी ।
सरिपमगममरिस सनिपमरिस ।
इति पटमंजरी ॥ ६९ ॥

मनित्यागादौडुवेषु सामंतः सादिरिष्यते ।
सरिगपधस धपगरिस ।
इति सामंतः ॥ ७० ॥

गधत्यागादौडुवेषु बडहंसः प्रकीर्तितः ।
सरिपस पनिपरिममरिस ।
इति बडहंसः ॥ ७१ ॥

इति दशममेलः ॥

( ३ ) गमधास्युस्तीव्रतरा निषादः काकली स्मृतः ।
पूर्वा स्यात्तत्र संपूर्णा पंचमादिकमूर्छना ॥
पनिधप पमपमगरिस ।
इति पूर्वा ॥ ७२ ॥

इति चतुर्विकृता मेलाः ॥

इति एकादशमेलः ॥

अथ पंचविकृत एको मेलः ॥

गमौ तीव्रतरौ यत्र रिधौ कोमलसंज्ञकौ ।
निषादः काकली; पूर्णा धनाश्रीस्तत्र कीर्तिता ॥
सरिगमपधनिस सनिधपमगरिस ।
इति धनाश्रीः ॥ ७३ ॥
इति द्वादशमेलः ॥

इति श्रीमहाराजाधिराजमहाराजगढादुर्गाधिप-
महाराजश्रीहृदयनारायणदेवविरचितो
हृदयप्रकाशः समाप्तः ॥

## अथ हृदयप्रकाशोक्तद्वादशमेलाः ।

### शुद्धस्वरमेलः ।

१ सा रे ग॒ म प ध नि॒ सां

### अथैकविकृतौ द्वौ मेलौ ।

२ सा रे ग ( तीव्रतरः ) म प ध नि॒ सां

३ सा रे ग॒ म प ध॒ नि॒ सां

### अथ द्विविकृतौ द्वौ मेलौ ।

४ सा रे॒ ग॒ म प ध॒ नि॒ सां

५ सा रे ग ( तीव्रतरः ) म प ध नि (तीव्रतरः) सां

### अथ त्रिविकृतास्त्रयो मेलाः ।

६ सा रे ग ( तीव्रतरः) म (तीव्रतरः) प ध नि ( तीव्रतरः ) सां

७ सा रे ग ( तीव्रतरः ) म प ध ( तीव्रतरः ) नि ( तीव्रतरः ) सां

८ सा रे ग ( तीव्रतमः ) म ( तीव्रतमः ) प ध नि ( तीव्रतमः) सां

### अथ चतुर्विकृतास्त्रयो मेलाः ।

९ सा रे॒ ग (तीव्रतरः) म प ध॒ नि (तीव्रतरः) सां

१० सा रे ग (अतितीव्रतमः) म (तीव्रतरः) प ध (तीव्रतरः) नि (काकलिः) सां

११ सा रे ग (तीव्रतरः) म (तीव्रतरः) प ध (तीव्रतरः) नि (काकलिः) सां

अथ पंचविकृत एको मेलः ।

१२ सा रे̱ ग (तीव्रतरः) म (तीव्रतरः) ध̱ नि (काकलिः ) सां

---

टीपः—स्वराखालील आडवी रेघ कोमलत्वाची आहे व सा वरील बिंदु तार-सप्तक दर्शवितो.

समाप्तम्

२९

॥ श्रीः ॥

हृदयनारायणदेवविरचितः

# हृदयप्रकाशः ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन यथामति

संशोधितम् ।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शकः १८४० सन् १९१८

30

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह–
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो–
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona,
by Anant Vinayak Patwardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A. LL. B.
at 2 Malabar Hill, Bombay.

॥ श्रीः ॥

# हृदयप्रकाशः ।

श्रीगणेशाय नमः ।

ब्रह्माद्यैरपि गीताय स्वबोधविभवाय च ।
अवितर्क्यस्वरूपाय परस्मै ब्रह्मणे नमः ॥
संगीतशास्त्रसर्वस्वमसाधारणगोचरम् ।
वीणादौ रागमेलादिर्हृदयेशेन कथ्यते ॥
आकरे बहवो मेला द्वादशेहोपयोगिनः ।
मेलः स्वरसमूहः स्याद्रागव्यञ्जनशक्तिमान् ॥
स्वराश्च षड्जऋषभौ गांधारो मध्यमस्तथा ।
पंचमो धैवतश्चैव निषाद इति सप्त ते ॥
स्वराणां व्यवहारोऽत्र प्राग्वदाद्याक्षरैः कृतः ।
द्विश्रुतिर्गोनिषादश्च प्रत्येकं त्रिश्रुती रिधौ ॥
चतुःश्रुतिसमायुक्ताः पूर्ववत्समपाः स्मृताः ।
स्वांत्यश्रुतिस्थिताः शुद्धाः स्युरन्ये विकृताः स्वराः ॥
श्रुतिमाद्यादि तुर्यांताः स्वरा ये चोर्ध्ववर्तिनः ।
तीव्रस्तीव्रतरस्तीव्रतमो भवंति हि क्रमात् ॥
स्वोपांत्यश्रुतिवर्ती तु कोमलः परिकीर्तितः ।
निस्तीव्रतरसंज्ञस्तु काकलीत्यपि कथ्यते ॥
सपयोर्यदि गृह्णीतस्तिस्रास्तिस्रः श्रुतीर्निमौ ।
मृदुसो मृदुपश्चेति तदाख्ये सपयोर्मते ॥
प्रयोगो बहुधा यस्य स स्याद्वादी नृपोपमः ।
ययोर्भवेयुः श्रुतयो द्वादशाष्टाथवान्तरे ॥

मिथः संवादिनौ तौ स्तौ राज्ञः सचिवसन्निभौ ।
विवादी रक्तिविच्छेदी शत्रुतुल्यः स कीर्तितः ॥
अनुवादी तटस्थो यः किंकरप्रतिमः स्वरः ।
सपौ रिधौ मध्यमसौ निगौ संवादिनौ मिथः ॥
यो यद्रागे जीवभूतः स तस्यांशः स्वरो मतः ।
क्रमेण स्वरसंदर्भोऽलंकारः स प्रचक्षते ॥
मंद्राद्यास्ते च भूयांसो मंद्रत्वे नैवमुच्यते ।
यत्रैकैकस्वरत्यागे पूर्वाद्यंत्यस्त्रिकः क्रमः ॥
यथा—सरिस रिगरि गमग मपम पधप धनिध निसनि ।
क्रियाविशेषजो धर्मः स्वरस्य गमको मतः ।
ग्रंथान्तरे च ते ज्ञेया नामतो हुंफितादयः ॥
न्यासो रागस्य तानस्य श्रान्तिकृद्रंजकस्वरः ।
द्वौ त्रयो वापि चत्वारः स्युस्ताना रंजकस्वराः ॥
पंचाद्यैरथ रागः स त्रिधा पंचभिरौडुवः ।
षड्भिः स्वरैः षाडवः स्यात्संपूर्णः सप्तभिः स्वरैः ॥
न्यासांशौ यत्र नोच्येते तत्त्वं षड्जस्य तत्र तु ।
मंद्रो मध्यश्च तारश्च त्रीणि स्थानानि चक्षते ॥
एकद्वित्र्यंतसंख्याकैस्तथा विद्यात्क्रमात्स्वरान् ।
रक्त्यारोहावरोहश्च स्वराणां मूर्छना स्मृता ॥

इति संज्ञापरिभाषा ।

अथ शुद्धादिस्वरप्रदेशः प्रदर्श्यते ।
ध्वन्यवच्छिन्नवीणादेर्मध्ये तारकसांस्थितिः ।
त्र्यंशिनस्याद्यभागांते मध्यमस्य च पंचमम् ॥
मध्यमं षड्जयोर्गतु सपयोर्मध्यमानयेत् ।
त्र्यंशितस्य तयोर्मध्यस्याद्यांशान्ते तथार्षभम् ॥
तथैव धैवतं मध्ये सपयोः स्थापयेद्बुधः ।
तत्र भागद्वयं त्यक्त्वा निषादाख्यं स्वरं नयेत् ॥

इति शुद्धस्वराः ।

भागत्रयोदिते मध्ये मेरो ऋषभसंज्ञिनः ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
भागत्रयविशिष्टेऽस्मिन् तीव्रगांधारषड्जयोः ॥
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ।
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ॥
कोमलो धैवतः स्थाप्यः पूर्वभागे विवेकिभिः ।
तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥

इति विकृतस्वराः ।

इत्थं सप्तस्वरान्मध्यस्थाने विन्यस्य तारके ।
तानेव द्विगुणीकृत्य ध्वनिज्ञानात्परीक्षयेत् ।
मध्यमस्थो यथा षड्जो द्वैगुण्येनोच्चतां व्रजेत् ॥
तथायं चालयेन्मन्द्रे षड्जस्तेन क्रमेण च ।
मध्यस्थितान् स्वरांस्तांस्तानवशिष्टानभीरयेत् ॥
यथातथं मध्यतारौ तंत्रीष्वेकादिषु स्मृतौ ।
मंद्रषड्जस्तु सर्वत्र परस्यां परिकीर्तितः ॥
मंद्रस्यांते च मध्याद्यां तंत्रीं केचन कुर्वते ।
मध्यतारौ तु संपूर्णौ तंबुराख्ये तथैव सः ॥
तस्यामेव यतस्तंत्र्यां स्थानत्रितययोगिनः ।
ताना भवन्तिस्मैकत्र शेषं बुद्ध्यावधारयेत् ॥

इति शुद्धविकृतस्वरप्रदेशनिरूपणम् ॥

## अथ मेलाः ।

### शुद्धस्वरमेलः ।

शुद्धसप्तस्वरे मेले सैंधवो भैरवीत्यपि ।
नीलांबरी च, तत्र स्यात्सैंधवो धैवतादिकः ॥

आरोहे गनिवर्जो यः स्फुरितेन युतो मुहुः ।
धसरीममपपधधसा निधपधमपमगरिसा ।
धसरिमसगारिगरिप । रिनीनीधपमपपमग-
रिरिगगरिस । धधसा निधप मपगगगरिस ।
धधसा निधप मपगगग रिसरिरिसासा निध-
पपमपधनीधमपगगरिस ।

इति सैंधवः ॥ १ ॥

सांशन्यासा च संपूर्णा षड्जादिर्भैरवी भवेत् ।

इति भैरवी ॥ २ ॥

अंशन्यासौपमौ यत्र षड्जादिर्यत्र मूर्छना ।
नीलांबरी सा विज्ञेया कंपांदोलनशोभिता ॥

इति नीलांबरी ॥ ३ ॥

इति शुद्धमेलः ॥

अथैकविकृतौ द्वौ मेलौ ।

( १ ) गांधारैकस्तीव्रतरः ( २ ) धैवतैककोमलः ।
( १ ) गैकस्तीव्रतरे मेले, कर्णाटः ककुभाभिधः ॥
खंभावती जिजावंती सौराष्ट्री सुघरायिका ।
कामोदश्चाप्यडानाख्यस्तथा वागीश्वरीत्यपि ॥
कर्णाटस्तत्र संपूर्णः षड्जादिः परिकीर्तितः ।
सरिगमपधनिस । निधपमगारिस ।

इति कर्नाटः ॥ ४ ॥

षड्जादिर्मूर्छना गांशा संपूर्णा ककुभा मता ।
सरिगमगमारिस । पपसानिनिनिपमगारिस ।

इति ककुभा ॥ ५ ॥

ऋषभादिर्जिजावंती पूर्णा पांशा प्रकीर्तिता ।
रिमपससनिधपमारिस निधपं निस ।

इति जिजावंती ॥ ६ ॥

ऋषभादिस्तु सौराष्ट्री कंपांदोलितशोभिता ।
रिमपसनिधपमगरिनिस ।

इति सौराष्ट्री ॥ ७ ॥

सुघरायीतु संपूर्णा पांशा गादिकमूर्छना ।
गरिगपमपपधनिस निनिधपमपगमरिस ।

इति सुघरायी ॥ ८ ॥

मांशो गवर्जः कामोदो ऋषभादिरुदाहृतः ।
रिरिममपसानिधपममरिसनिधपस ।

इति कामोदः ॥ ९ ॥

धैवतादिरडानाख्यो धैवतांशस्वरो मतः ।
प्रसिद्धस्तु निषादादिर्यज्ञानंदेन कीर्तितः ॥
धसरिमपमधनिसनिधपममरिस ।

इत्यडाना ॥ १० ॥

गादिर्वागेश्वरी मांशा पहीना षाडवेषु तत् ।
गमधधानिसनिधमगरिसनिधधनिस ।

इति वागेश्वरी ॥ ११ ॥

इति द्वितीयमेलः ।

( २ ) धकोमला मुखारी स्यात्पूर्णा धादिकमूर्छना ।
धसरिमपधससनिधपमगरिस ।

इति मुखारी ॥ १२ ॥

इति तृतीयमेलः ।

अथ द्विविकृतौ द्वौ मेलौ ।

( १ ) कोमलर्षभधैवतौ ( २ ) तीव्रतरगांधारनिषादौ च ।
( १ ) कोमलर्षभधा पूर्णा गांशा तोडी निरूप्यते ।
सरिगमपधनिससनिधपमगरीस ।

इति तोडी ॥ १३ ॥

इति चतुर्थमेलः ।

( २ ) गनितीव्रतरे मेले केदारः श्यामनाटकः ।
खंबावतीच हंमीरः शंकराभरणस्तथा ॥
जयत्पूर्वश्च केदारः पूरियोपपदस्तथा ।
विहागराहीरनाटौ मारुभीमपलाशिका ॥
छायाकेदारनाटौ च मालकौशिक इत्यपि ।
भूपाळीचेति; केदारः संपूर्णो गादिमूर्छनः ॥
गमपसनिधपमगरिस ।

इति केदारः ॥ १४ ॥

गादिः पूर्णश्च सन्यासः पमांशश्यामनाटकः ।
गमपस सनिधपम पममरिस रिमपमम ।

इति श्यामनाटकः ॥ १५ ॥

धादिः खंबावती पूर्णारोहणे धैवतोज्झिता ।
ममपनिस सनिधपम गरिसगस ।

इति खंबावती ॥ १६ ॥

रिगांशो गादिकः पूर्णो हंमीरः परिकीर्तितः ।
गमपनिधनिस सरिसनिस रिगमपधमप
सरिसनिधप मगमगस ।

इति हंमीरः ॥ १७ ॥

शंकराभरणो गादिर्डोलकंपमनोहरः ।
गमपनिस सनिधपमगरिस पसनि ।

इति शंकराभरणः ॥ १८ ॥

अत्रैवोत्प्रेक्षितो रागो जयत्केदार इत्यसौ ।
जयच्छ्रीयोगतः पूर्णो गन्यासो गादिमूर्छनः ।
गमपनिस सनिधप गमरिस सनिसग ।

इति जयत्केदारः ॥ १९ ॥

पूरिया पूर्वकेदारः पूर्णो मादिकमूर्छनः ।
मधनिस सनिधप मगरिस ।
इति पूरियाकेदारः ॥ २० ॥

षाडवेषु धहीनत्वात् गांधारादिर्विहागरः ।
गमपनिस, सनिपमगरिस, सरिगमगरिस, निस ।
इति विहागरः ॥ २१ ॥

धहीनः षाडवोऽहीरनाटो गादिकमूर्छनः ।
गमपनिस, निपमगरिस ।
इत्यहीरनाटः ॥ २२ ॥

रिहीनो गादिको मारुः षाडवः परिकीर्तितः ।
गमप सनिधप गमस ।
इति मारुः ॥ २३ ॥

गादिर्धहीना षड्जादिर्ज्ञेया भीमपलाशिका ।
गमपनिस सपमग रिसनिस ।
इति भीमपलाशिका ॥ २४ ॥

गांधारादिश्च संपूर्णश्छायानाट उदाहृतः ।
गमपस सनिरिस निनिस धपमग सरिस ।
इति छायानाटः ॥ २५ ॥

धहीनः षाडवो गादिर्ज्ञेयः केदारनाटकः ।
गमपनिस सनिपममरिस निनिस ।
इति केदारनाटकः ॥ २६ ॥

संन्यासः षाडवः सादिः कथितो मालकौशिकः ।
सरिगध निससनिध मगरिस ।
इति मालकौशिकः ॥ २७ ॥

मनित्यागादौडुवेषु भूपाली गादिरिष्यते ।
गपधस सधप गरिगरिस धधधध सरिगरिस ।
इति भूपाली ॥ २८ ॥

इति पंचममेलः ।

अथ त्रिविकृतास्त्रयो मेलाः ।

( १ ) गांधारमध्यमनिषादानां तीव्रतरत्वे प्रथमः ।
( २ ) गांधारधैवतनिषादानां तीव्रतरत्वे द्वितीयः ।
( ३ ) गांधारमध्यमनिषादानां तीव्रतमत्वे तृतीयः ।

( १ ) गमध्यमनिषादास्तु यत्र तीव्रतराः कृताः ।
तत्रेमनःपूरियाख्यौ जयत्कल्याण एव च ।
चतुर्थः शुद्धकल्याणः; पूर्णस्तत्रेमनो यथा ।
सरिगमपधनिस सनिधपमगरिस ।

इतीमनः ॥ २९ ॥

पूरियामध्यमादिः स्यात् संपूर्णः कंपशोभितः ।

इति पूरियाकल्याणः ॥ ३० ॥

गांधारादिस्तु संपूर्णो जयत्कल्याण उच्यते ।
गमपस निधपम गारिस ।

इति जयत्कल्याणः ॥ ३१ ॥

मनिहीनः शुद्धपूर्वकल्याणः कथितो बुधैः ।

इति शुद्धकल्याणः ॥ ३२ ॥

इति षष्ठमेलः ।

( २ ) गधैवतनिषादास्तु यत्र तीव्रतराः कृताः ।
तत्र मेले भवन्मेघः शुद्धनाटबिलावलौ ।
नटो देवगिरी गौरसारंगोऽलहिया तथा ।
देवाभरणदेशाख्यौ गौंडमल्लार दूहवौ ।
मध्यमादिश्च मल्लारो; मेघः संपूर्ण उच्यते ।
सरिगमपधनिस रिसनिधपमगरिस
निधपमपस ।

इति मेघः ॥ ३३ ॥

ऋषभादिश्च संपूर्णोऽवरोहे धगवर्जितः ।
निमांशस्वरयोः कंपी शुद्धनाट उदाहृतः ॥
रिगमपधनिस पगमरिस धधनिस ।

इति शुद्धनाटः ॥ ३४ ॥

गांधारादिर्नटः पूर्णः पधसैः कंपितैः कलः ।
गमधसरिपनिध पधपमगरिस गरिसगमध
पमगरिस रिसरिसरिस निधपमनिस ।

इति नटः ॥ ३५ ॥

गांशा गादिरपारोहा पूर्णा देवगिरी मता ।
गमधनिस सनिधपमगरिस सनिधपमनिस ।

इति देवगिरी ॥ ३६ ॥

गादिर्गपांशः संपूर्णो गौरसारंग इष्यते ।
गमपस निधपममरिस सरिससरिग ।

इति गौरसारंगः ॥ ३७ ॥

ऋषभांशस्तु संपूर्णोऽलहियाह्वस्तु धादिकः ।
धनिधपसरिस गमगपधस निधपमगरिस ।

इति अलहिया ॥ ३८ ॥

गांधारादिस्तु संपूर्णो देवाभरण इष्यते ।
शंकराभरणवदत्र पांशत्वमवधारयेत् ॥
गमपस सनिपमगरिस निसधपमगरिस निस ।

इति देवाभरणः ॥ ३९ ॥

धहीनः षाडवो गादिर्देशाखः परिकीर्तितः ।
गमपस सनिपमगगमरिस ।

इति देशाखः ॥ ४० ॥

रिषभादिर्गहीनस्तु गौंडमल्लार इष्यते ।
रिमरिमपधमपधससधपममरिस ।

इति गौंडमल्लारः ॥ ४१ ॥

निहीनः षाडवोगादिः सूहवः परिकीर्तितः ।
पमपसरिससधपममरिस ।

इति सूहवः ॥ ४२ ॥

मध्यमादिर्गहीनत्वात् षाडवोमध्यमादिकः ।
ममनिससरिसस निपमपनिसपनिपमरिस
निसरिस ।

इति मध्यमादिः ॥ ४३ ॥

स्याद्गहीनस्तु मल्लारः सादिरौडुव ईरितः ।
सरिपमपधपधपममममरिस ।

इति मल्लारः ॥ ४४ ॥

इति सप्तममेलः ।

गस्यतीव्रतमत्वेऽथ तथा तीव्रतमौ मनी ।
इहैवोत्प्रेक्षितापूर्वा हृदयाद्या रमोच्यते ॥
समगधपममभरिस निपससारिमस
रिसममरिस ।

इति हृदयरमा ॥ ४५ ॥

इति अष्टममेलः ।

इति त्रिविकृतमेलाः ।

## अथ चतुर्विकृतास्त्रयो मेलाः ।

( १ ) तत्र ऋषभधैवतयोः कोमलत्वे, गांधारनिषादयो तीव्रतरत्वे प्रथमः ।

( २ ) गांधारस्यातितीव्रतमत्वे, मध्यमधैवतयोस्तीव्रतरत्वे, निषादस्यकाकलित्वे द्वितीयः ।

( ३ ) गांधारमध्यमधैवतानां तीव्रतरत्वे, निषादस्यकाकलित्वे तृतीयः ।

( १ ) रिधयोः कोमलत्वात्तु गन्योस्तीव्रतरत्वतः ।
चतुर्भिर्विकृतैर्गौरी मूलतानीधनाश्री ।

श्रीरागश्चैव षड्रागश्चैतीगौरी वसंतकः ।
जयश्रीरामकल्याँच परजः पंचमः पुनः ॥
गांधारासावरीदेशीतोडीमालवभैरवाः ।
बहुली गुर्जरी गौडोगण्यागुणकरी ततः ॥
देशकालश्च मालश्रीर्विभासत्रिवणौ तथा ।
ऋषभांशातुगौरीस्यात्पूर्णाऽऽरोहे धगोज्झिता ॥

रिमपनिस सनिधपमगरिस ।

इति गौरी ॥ ४६ ॥

पूर्णागादिरथाऽऽरोहे मूलतानीधनासरी ।

इति मूलतानीधानसरी ॥ ४७ ॥

संपूर्णऋषभादिः स्यादारोहे गधवर्जितः ।
रिपंचमांशः श्रीरागः सांतः कंपेन शोभितः ।

रिमपनिस सनिधपमगरिगरिस ।

इति श्रीरागः ॥ ४८ ॥

पांशन्यासश्च संपूर्णः षड्रागो गादिमूर्छनः ।
गमपधनिधपरिगरिसममरिरिमप ।

इति षड्रागः ॥ ४९ ॥

पंचमादिश्च संपूर्णा चैतीगौरी निरुप्यते ।

पसनिधपममरिगारिस ।

इति चैतीगौरी ॥ ५० ॥

आरोहे पोज्झितो माद्यः पूर्णोधांशो वसंतकः ।

मधनिस निधपमगरिस ।

इति वसंतः ॥ ५१ ॥

गादिर्जयश्रीः पांशास्यादारोहेधरिवर्जिता ।

धमप सनिधपमगरिस ।

इति जयश्रीः ॥ ५२ ॥

आरोहे मनिहीनास्याद्गांधारादिकमूर्छना ।
धैवतांशा च गन्यासा पूर्णा रामकली मता ॥

गपधस सनिधपगमगारिससरिग ।

इति रामकली ॥ ५३ ॥

गादिर्धन्युज्झितो रोहे परजो मध्यमांशकः ।

गमपसनिधपमगमगारिस ।

इति परजः ॥ ५४ ॥

पहीनारोहणः सादिर्मांशिन्यासस्तु पंचमः ।

सरिगमधनिस सनिधपमगरिस ।

इति पंचमः ॥ ५५ ॥

ऋषभादिर्धैवतांशो गांधारः परिकीर्तितः ।

रिमपधसं सनिधपममरिस ।

इति गांधारः ॥ ५६ ॥

निशून्यारोहणा मादिः संपूर्णाऽऽसावरी मता ।

मपधस निधपमगरिस धरिस ।

इत्यासावरी ॥ ५७ ॥

गांधारादिश्च संपूर्णा देशीतोडी निरूप्यते ।

रिसारिसनिधधनिस सरिगमपधनिस

निधपमगरिसारिस ।

इति देशीतोडी ॥ ५८ ॥

संपूर्णो भैरवः प्रोक्तो गांधारादिकमूर्छनः ।

गमपस निधपमगरिस ।

इति भैरवः ॥ ५९ ॥

गादिर्मंहीना बहुली षाडवेषु निरूप्यते ।

गपधस धनिधस गरिस ।

इति बहुली ॥ ६० ॥

गादिर्धांशा मनित्यागादौडुवेष्वथ गुर्जरी ।

गमपस निधपमरिस ।

इति गुर्जरी ॥ ६१ ॥

ऋषभादिर्गधत्यागादौडुवो गौड इष्यते ।
रिमपनि रिमपनिस सनिपमरिस ।
इति गौडः ॥ ६२ ॥

औडुवेषु धगत्यागाद्रण्या गुणकरी बुधैः ।
सरिरिमपपससनिपप ममरिस सरिममरिस ।
इति गुणकरी ॥ ६३ ॥

गनिशून्यो मध्यमांशो देशकालस्तथौडुवः ।
रिपधस सधपगरिगरिस ।
इति देशकालः ॥ ६४ ॥

रिधत्यागादौडुवेषु मालश्रीर्गादिरिष्यते ।
गमपनिस सनिपमगस ।
इति मालश्रीः ॥ ६५ ॥

औडुवो मनिहीनत्वात् बिभासो गादिरिष्यते ।
गपधस धपगरिगरिस ।
इति बिभासः ॥ ६६ ॥

ऋषभादिर्मनित्यागादौडुवस्त्रिवणो भवेत् ।
रिपधस धपगरिगरिस ।
इति त्रिवणः ॥ ६७ ॥

इति नवममेलः ॥

( २ ) अतितीव्रतमो गाख्यो मधौ तीव्रतरौ कृतौ ।
यत्र निः काकली; तत्र सारंगः पटमंजरी ॥
सामंतबडहंसौ च; सारंगः सादिमूर्छनः ।
सरिगमपधनिस सनिधपमगरिस ।
इति सारंगः ॥ ६८ ॥

गधत्यागादौडुवेषु षड्जादिः पटमंजरी ।
सरिपमगममरिस सनिपमरिस ।
इति पटमंजरी ॥ ६९ ॥

मनित्यागादौडुवेषु सामंतः सादिरिष्यते ।
सरिगपधस धपगारिस ।

इति सामंतः ॥ ७० ॥

गधत्यागादौडुवेषु बडहंसः प्रकीर्तितः ।
सरिपस पनिपरिममरिस ।

इति बडहंसः ॥ ७१ ॥

इति दशममेलः ॥

( ३ ) गमधास्युस्तीव्रतरा निषादः काकली स्मृतः ।
पूर्वा स्यात्तत्र संपूर्णा पंचमादिकमूर्छना ॥
पनिधप पमपमगरिस ।

इति पूर्वा ॥ ७२ ॥

इति चतुर्विकृता मेलाः ॥

इति एकादशमेलः ॥

अथ पंचविकृत एको मेलः ॥

गमौ तीव्रतरौ यत्र रिधौ कोमलसंज्ञकौ ।
निषादः काकली; पूर्णा धनाश्रीस्तत्र कीर्तिता ॥
सरिगमपधनिस सनिधपमगरिस ।

इति धनाश्रीः ॥ ७३ ॥

इति द्वादशमेलः ॥

इति श्रीमहाराजाधिराजमहाराजगढादुर्गाधिप-
महाराजश्रीहृदयनारायणदेवविरचितो
हृदयप्रकाशः समाप्तः ॥

## अथ हृदयप्रकाशोक्तद्वादशमेलाः ।

### शुद्धस्वरमेलः ।

१ सा रे ग म प ध नि सां

### अथैकविकृतौ द्वौ मेलौ ।

२ सा रे ग ( तीव्रतरः ) म प ध नि सां

३ सा रे ग म प ध नि सां

### अथ द्विविकृतौ द्वौ मेलौ ।

४ सा रे ग म प ध नि सां

५ सा रे ग ( तीव्रतरः ) म प ध नि (तीव्रतरः) सां

### अथ त्रिविकृतास्त्रयो मेलाः ।

६ सा रे ग ( तीव्रतरः) म ( तीव्रतरः ) प ध नि ( तीव्रतरः ) सां

७ सा रे ग ( तीव्रतरः ) म प ध ( तीव्रतरः ) नि ( तीव्रतरः ) सां

८ सा रे ग ( तीव्रतमः ) म ( तीव्रतमः ) प ध नि ( तीव्रतमः) सां

### अथ चतुर्विकृतास्त्रयो मेलाः ।

९ सा रे ग (तीव्रतरः) म प ध नि (तीव्रतरः) सां

१० सा रे ग (अतितीव्रतमः) म (तीव्रतरः) प ध (तीव्रतरः) नि (काकलिः) सां

११ सा रे ग (तीव्रतरः) म (तीव्रतरः) प ध (तीव्रतरः) नि (काकलिः) सां

अथ पंचविकृत एको मेलः ।

१२ सा रे ग (तीव्रतरः) म (तीव्रतरः) ध नि (काकलिः ) सां

---

**टीपः**—स्वराखालील आडवी रेघ कोमलत्वाची आहे व सा वरील बिंदु तार-सप्तक दर्शवितो.

समाप्तम्